## संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -10

Bk. Demlan 2000

## WHY PROPAGATION OF SAMSKRIT AND HOW ?

### Assistence from Retired Persons

After retirement, many people seek an occupation that will help in spending their time productively. Such people could be trained in Samskrit or encouraged to take the correspondence course and they could help in spreading Samskrit to other people. As they have rich experience, they could lend a helping hand that would be very useful in propagating Samskrit. In this way, they could use their time productively and also derive satisfaction from saving our Mother tongue.

### Balakendram

In modern times,often,even parents don't have any time for their childern and are left to amuse themselves. At such times, Balakendras can be conducted and using the book "Balakendram" childern can be introduced to Samskrit. This publication helps teach Samskrit in a simple manner through play and activities. It provides wholesome entertainment to childern which will also help enrich their personality, lifestyle and thinking with our culture.

Samskrit in Clinics and Hospitals

A hospital is a place where people of all ages and walks of life visit at some time or the other. If we could have signs denoting operation theatre, emergency ward etc in Samskrit also, all the patients, others accompanying them and hospital staff would get to read them. If the doctor wishes, he could even have the medical instruments labelled in Samskrit, along with the name in English. This would not offend anybody but only serve to excite the interest and curiosity about Samskrit in people. It would of course serve in propagating Samskrit.

*NOTE:*

**The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.**



ॐ

जयतु भारतम् - जयतु भारती

# संस्कृतभारती

Samskrita Bhāratī

## पत्रालयद्वारा संस्कृतम्

Samskrit Through Correspondence

'Aksharam' 8th cross, Girinagar II Phase
Bangalore-560 085. Ph.: 6721052

## परिचयः - PARICHAYA

### दशमः पाठः - TENTH LESSON

॥ तस्य तदेव मधुरं यस्य मनो यत्र संलग्नम् ॥

Sweet it is to him to which his mind is struck.

### १. विशेषण-विशेष्याणि

The noun is called Visheshya (substantive) and qualities or properties expressed of it are its Visheshanas (adjectives). Let us acquaint ourselves with some of them in sentences.

१. सुन्दरः तरुणः तत्र तिष्ठति ।

२. दीर्घा लता सर्वत्र प्रसृता[a] अस्ति ।

३. उद्याने उन्नताः वृक्षाः सन्ति ।

४. शुकाः[b] मधुराणि फलानि खादन्ति ।

---

a. spread, b. parrots

५. जनाः नद्यां मलिनानि वस्त्राणि क्षालयन्ति ।

६. जनकः पुत्रीम् उमाम् आह्वयति[c] ।

७. नार्यः लघुना कन्दुकेन[d] क्रीडन्ति ।

८. बालिका दीर्घया लेखन्या लिखति ।

९. सर्वे नूतनैः पुष्पैः देवम् अर्चन्ति ।

१०. जगद्धिताय[e] देवाय नमः ।

११. सर्वाभ्यः प्रजाभ्यः स्वस्ति ।

१२. उत्तीर्णेभ्यः छात्रेभ्यः प्रशस्तिपत्रं प्रयच्छन्ति ।

१३. बालकः धावतः[f] वाहनात् पतति ।

१४. सर्वे कठिनात् आतपात्[g] ताम्यन्ति ।

१५. उन्नतात् वृक्षात् फलानि पतन्ति ।

१६. सकलस्य प्रपञ्चस्य सृष्टिकर्ता परमात्मा ।

१७. प्रवहन्त्याः[h] नद्याः जलं निर्मलम् ।

१८. कविकुलगुरोः कालिदासस्य कविता ।

१९. तस्यां पाठशालायां संस्कृतकक्ष्या प्रचलति ।

२०. सर्वेषु स्थलेषु देवः अस्ति ।

२१. विशाले क्रीडाङ्गणे सर्वे क्रीडन्ति ।

२२. बहवः कवयः सुन्दरान् श्लोकान्[1] लिखन्ति ।

२३. सर्वे जनाः उदयमानस्य[i] सूर्यस्य किरणान् दृष्ट्वा हृष्यन्ति[j] ।

२४. अम्ब ! एकां[2] कथां कथय ।

२५. चत्वारि आम्रफलानि, पञ्च नालिकेरफलानि च सन्ति ।

२६. छात्राः धीराः[3] धीमन्तः[k] पटवः[l] विनीताः[m] च भवेयुः ।

---

c. calls, d. with a ball, e. doing good to the world, f. running, g. sunshine, h. flowing, i. rising, j. get delighted, k. wise, l. skilled, m. modest.





1. In the same sentence, adjectives agreeing with the subject, object, etc. can be used.
   Ex. बहवः कवयः सुन्दरान् श्लोकान् लिखन्ति ।
2. Words expressive of number are generally used as Visheshanas.
   Ex. एकां कथां कथय ।
3. One Visheshya can have many Visheshanas.
   Ex. धीराः धीमन्तः चतुराः बालाः ..... ।

### प्रश्नाः

(अ) १. जनाः कुत्र कीदृशानि वस्त्राणि क्षालयन्ति ?

२. कीदृशेभ्यः छात्रेभ्यः किं प्रयच्छन्ति ?

३. सर्वे कीदृशात् आतपात् ताम्यन्ति ?

४. छात्राः कीदृशाः भवेयुः ?

५. कुत्र देवः अस्ति ?

(आ) Fill up the blanks with suitable adjectives:

१. ........ वृक्षात् पर्णानि पतन्ति ।

२. ........ गृहे चित्राणि सन्ति ।

३. ........ उद्यानेभ्यः फलानि आनय ।

४. ........ नद्यां मीनाः सन्ति ।

५. ........ देवाय नमः ।

(इ) Fill up the blanks with suitable substantives:

१. स्थूलं .......... दृष्ट्वा मम भीतिः ।

२. कृष्णं .......... मा धारय ।

३. दीर्घायां ............ पुष्पाणि बहूनि ।

४. स्त्रियः मलिनानि ............... क्षालयन्ति ।

५. तस्यां शालायां ............ कक्ष्या प्रचलति ।

## २. चाटुश्लोकः

Two lady friends met once after their marriage. They exchanged notes about the inner worth of their respective husbands. The following stanza belongs to such a context:

चतुरः खलु मे भर्ता लिखति च यच्च परो न वाचयति ।
सखि ! चतुरतरो मे भर्ता स्वयमपि लिखितं स्वयं न वाचयति ।।

One of the ladies said- "My husband is very intelligent. No body can read what he writes." The other lady said- "My husband is more intelligent. He cannot read what he has himself written."

## ३. समस्या

पानीयं पातुमिच्छामि त्वत्तः कमललोचने ।
यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ।।

The apparent meaning of the stanza involves a contradiction. The meaning of the stanza is "O Lotus-eyed one! I want to drink water from you. I do not drink if you give. I shall drink if you do not give."

The solution to the problem is as follows:- Split the word दास्यसि as दासी + असि (if you are a slave girl) नो दासी असि - if you are not a slave girl. If दास्यसि is taken as a verb, then arises the contradiction.

## ४. सुभाषितम्

गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते तदिदमपि नो विस्मयपदम् ।
महामेघः क्षारं पिबति कुरुते वारि मधुरं
फणी क्षीरं पीत्वा वमति गरलं दुःसहतरम् ।।





पदविभागः -

गुणायन्ते, दोषाः, सुजनवदने, दुर्जनमुखे, गुणाः, दोषायन्ते, तत्, इदम्, अपि, नो, विस्मयपदम्, महामेघः, क्षारम्, पिबति, कुरुते, वारि, मधुरम्, फणी, क्षीरम्, पीत्वा, वमति, गरलम्, दुःसहतरम् ।।

तात्पर्यम् -

Defects turn into virtues when they come from (lit from the mouth of) the good persons. Virtues turn into defects when they come from the wicked. This is not an occasion to be surprised. The great cloud drinks salty water and makes rain water sweet. The serpent drinks milk, but emits intolerable poison.

वनेऽपि सिंहा मृगमांसभक्षिणो
बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता
न नीचकर्माणि समाचरन्ति ।।

पदविभागः -

This can be easily prepared.

तात्पर्यम् -

Lions which feed on the flesh of wild animals do not eat grass when badly hungry. Similarly persons of noble origin do not follow bad paths when they are overpowered by adversity.

## ५. पदसङ्ग्रहः

क्षिप् - To throw

१) क्षिपति २) क्षिप्यते ३) क्षेप्स्यति
४) क्षेप्तव्यम्, क्षेपणीयम् ५) क्षिप्तः, क्षिप्ता, क्षिप्तम् ६) क्षिप्तवान्, क्षिप्तवती
७) क्षिपन्, क्षिपन्ती, क्षिपती ८) क्षिप्त्वा, निक्षिप्य ९) क्षेप्तुम् ।

खन् - To dig

१) खनति २) खन्यते, खायते ३) खनिष्यति

४) खनितव्यम्, खननीयम् ५) खातः, खाता, खातम् ६) खातवान्, खातवती ७) खनन्, खनन्ती ८) खनित्वा, खात्वा, उत्खाय ९) खनितुम् ।

खेल् - To play

१) खेलति २) खेल्यते ३) खेलिष्यति

४) खेलितव्यम्, खेलनीयम् ५) खेलितः, खेलिता, खेलितम् ६) खेलितवान्, खेलितवती ७) खेलन्, खेलन्ती ८) खेलित्वा, प्रखेल्य ९) खेलितुम् ।

गद् - To tell

१) गदति २) गद्यते ३) गदिष्यति

४) गदितव्यम्, गदनीयम् ५) गदितः, गदिता, गदितम् ६) गदितवान्, गदितवती ७) गदन्, गदन्ती ८) गदित्वा, निगद्य ९) गदितुम् ।

गर्ज् - To roar

१) गर्जति २) गर्ज्यते ३) गर्जिष्यति

४) गर्जितव्यम्, गर्जनीयम् ५) गर्जितः, गर्जिता, गर्जितम् ६) गर्जितवान्, गर्जितवती ७) गर्जन्, गर्जन्ती ८) गर्जित्वा, सङ्गर्ज्य ९) गर्जितुम् ।

## ६. काव्यकथा

### रघुवंशस्य अवनतिः

अमात्याः अतिथिंमहाराजस्य पट्टाभिषेकं कृतवन्तः । अतिथिः उदारपुरुषः । सः पट्टाभिषेकसमये कारागृहे स्थितानां जनानां विमोचनं कृतवान् । पञ्जरे स्थितानां शुकानाम् अपि विमोचनं कृतवान् । तस्य परिजनेषु, प्रजासु, सचिवेषु च अतीव आदरः । विवादेषु स्वयम् एव धर्मासने उपविशति स्म । उचितं न्यायनिर्णयं प्रकटयति स्म । अनृतं तु स्वप्नेऽपि न उक्तवान् । योग्ये एव दानं कृतवान् । 'शौर्यरहिता नीतिः प्रयोजनाय न भवति । नीतिरहितं शौर्यं पशुचेष्टावत् भवति ।' अतः अतिथिचक्रेश्वरः नीतिं शौर्यं च यथोचितम् अनुसृतवान् । सः प्रतिदिनं मन्त्रिभिः सह मन्त्रालोचनं करोति स्म । तथापि मन्त्रालोचनं गुप्तं भवति स्म । एवं साम-दान-भेद-दण्डैः अतिथिचक्रेश्वरः राज्यं परिपालितवान् । स्वर्गस्य देवेन्द्रः इव भूलोकस्य चक्रेश्वरः अभवत् ।





एवं रघुवंशस्य नृपाः शैशवे विद्याम् अधीतवन्तः । यौवने सुखम् अनुभूतवन्तः । वृद्धावस्थायां वानप्रस्थाश्रमं स्वीकृतवन्तः । केचित् नृपाः योगेन शरीरपरित्यागमपि कृतवन्तः । इत्थं रघुवंशस्य नृपाः राज्यं, प्रजाः च योग्येन मार्गेण परिपालितवन्तः ।

अतिथिचक्रेश्वरात् विंशतितमः (२०) सुदर्शनो नृपः । सुदर्शनः स्वपुत्रम् अग्निवर्णम् अभिषिच्य तपः कर्तुं नैमिषारण्यं गतवान् ।

अग्निवर्णः रघुकुले निकृष्टः नृपः । तं द्रष्टुं यदा जनाः आगताः तदा सः बहिः पादद्वयं प्रदर्शितवान् । सदा कामासक्तः अन्तःपुरे सर्वम् आयुः यापितवान् । अतः क्षयरोगेण पीडितः अभवत् । यौवने एव रोगात् मृतः । मरणसमये तस्य पत्नी गर्भिणी आसीत् । अतः सचिवाः गर्भस्थशिशोः एव अभिषेकं कृतवन्तः । ततः राज्ञी एव सचिवानां साहाय्येन प्रजापालनं कृतवती ।

### The Decline of the Raghu dynasty

The ministers coronated Atithi as the emperor. Atithi was a generous man. At the time of the coronation he released the people put in prison. He also released the parrots that were put in cages. He had great regard for the servants, subjects and ministers. At the times of judicial proceedings he used to personally sit on the seat of judgement. He used to give appropriate judgements. Not even in dreams he lied. He used to present gifts to the worthy and the deserving. "Policy without valour is of no use. Valour without right policy would be beastly action." Hence Atithi the emperor was pursuing right policy and

valour according to the demands of the time. He used to hold counsel with ministers everyday. But the consultation was always properly guarded. Thus with Sama, Dana, Bheda and Danda (conciliation, extending gifts, dividing and punishment) Atithi the emperor ruled the kingdom. Like Devendra in heaven he became the emperor on earth.

Thus the kings of the Raghu race learnt the lores in their boyhood. In youth they enjoyed life. In old age they undertook Vanaprastha (hermit's life.) Some kings even gave up their life through yoga. Thus the kings of the Raghu race looked after the kingdom and the subjects in the right way.

Emperor Atithi onwards the twentieth king was Sudarshana. Sudarshana coronated his son Agnivarna and went to Naimisha forest for penance.

Agnivarna was a bad king. When people came to see him he used to show his feet. He was always indulging in sensuality. He spent all his life in harem. Hence he was caught with tuberculosis. He died when he was young. At the time of his death, his wife was pregnant. Hence the ministers celebrated the coronation of the child in womb. Thereafter the queen, assisted by the ministers, carried on the administration of kingdom.

## ७. अन्वयक्रमः

सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा ॥ १८ ॥

**पदविभागः-**

सुताम्, तदीयाम्, सुरभेः, कृत्वा, प्रतिनिधिम्, शुचिः, आराधय, सपत्नीकः, प्रीता, कामदुघा, हि, सा ।





**अन्वयः -**

तदीयाम्, सुताम्, सुरभेः, प्रतिनिधिम्, कृत्वा, शुचिः, सपत्नीकः, आराधय, हि, सा, प्रीता, कामदुघा ।

**अन्वयार्थः -**

तदीयाम् - That (Her) सुताम् - the daughter Nandini (Acc), सुरभेः - of the divine cow, प्रतिनिधिम् - (as) representative, कृत्वा - making (considering) शुचिः - being pure, सपत्नीकः - along with wife, आराधय - serve, हि - because, सा - that Nandini, प्रीता - (if) pleased, कामदुघा - would grant all desires.

**तात्पर्यम् -**

Don't bother now about the unobtainable Kamadhenu. Her daughter Nandini dwells in our hermitage. Regarding her as Kamadhenu's representative you serve her, observing vow with your wife. If she is pleased she would grant all your desires.

इति वादिन एवास्य होतुराहुतिसाधनम् ।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ १९ ॥

**पदविभागः -**

इति, वादिनः, एव, अस्य, होतुः, आहुतिसाधनम्, अनिन्द्या, नन्दिनी, नाम, धेनुः, आववृते, वनात् ।

**अन्वयः -**

इति, वादिनः, एव, होतुः, अस्य, आहुतिसाधनम्, नन्दिनी, नाम, अनिन्द्या, धेनुः वनात्, आववृते ।

**अन्वयार्थः -**

इति - Thus, वादिनः एव - while saying, होतुः अस्य - of this sacrificer Vasistha, आहुतिसाधनम् - means of oblations, नन्दिनी नाम - by name Nandini, अनिन्द्या - irreprehensible, धेनुः - cow, वनात् - from the forest, आववृते - returned.

**तात्पर्यम् -**

While Vasistha was saying thus Nandini returned to hermitage from the forest. Nandini supplies all the materials of sacrifice for Vasistha in his daily rituals. The return of Nandini from the forest

at this juncture was indicative of fulfilment of Dilipa's desire. Blessed with Nandini's grace Dilipa in course of time obtained a male progeny in Sudakshina. This very child grew to be the great king Raghu.

## ८. अनुवादपद्धतिः

'Clever boy' - बुद्धिमान् बालः - Here the word 'clever' is an adjective to the word 'boy' which is a substantive. The object of description is a substantive. The special quality in the substantive is brought out by the adjective.

The adjective follows the substantive in case, number and gender. It does not have independent gender, number and case.

For example take the word "clever", which is to be translated. Which gender, number or case do you affix it with? It is to be decided after studying the substantive that follows it.

Eg. Clever boy - चतुरः बालः ।

Clever girl - चतुरा बालिका ।

By clever boy - चतुरेण बालेन ।

Clever girl (obj) - चतुरां बालिकाम् ।

To Clever boy - चतुराय बालाय ।

Of Clever girl - चतुरायाः बालिकायाः ।

We observe in the above examples how there is a change in gender, number and case of the adjective viz., clever caused by the respective change in the substantive.

'That school', 'this city' and in such other examples, what do the words 'this', 'that' and others stand for? Here too these words do not have their own case - ending, number and gender. Their forms have to be deciphered only after knowing their substantive.

Eg.- In that house - तस्मिन् गृहे ।

To these boys - एतेभ्यः बालकेभ्यः ।

That boy (obj) - तं बालकम् ।

In this sentence - एतस्मिन् वाक्ये ।





To that school - तस्मै विद्यालयाय ।

Of these lessons - एतेषां पाठानाम् ।

Of that village - तस्य ग्रामस्य ।

This book (obj) - एतत् पुस्तकम् ।

By these people - एतैः जनैः ।

These pens - एताः लेखन्यः ।

So while translating into Samskrit, more attention should be paid to the substantive and accordingly the gender, number and case of the adjective have to be first determined.

I. आङ्ग्लभाषया अनुवादं कुरुत-

१. उत्तमानि एतानि चित्राणि भवान् कुत्र क्रीतवान् ?

२. उन्नतात् वृक्षात् पर्णम् अपतत् ।

३. विशालायां नद्यां मीनाः सन्ति ।

४. एतत् पुस्तकं भवान् पठितवान् वा ?

५. तस्य अक्षराणि सुन्दराणि ।

६. एतस्यां लतायां सुन्दराणि पुष्पाणि सन्ति । (पर्णम् - ಎಲೆ)

II. Translate into Samskrit -

1. Let all people do work.
2. He writes with a beautiful pen.
3. There are 100 students in this school.
4. How many flowers are there in that garland?
5. Who is not faultless?
6. There are diverse people in this world.
7. People stroll in this vast garden.
8. The colour of the new saree is good.

(all - सर्वे, many, different, diverse - बहुविधः, of saree शाटिकायाः)

III. Translate the following sentences into Samskrit. Use only past participles. Eg. - गतवान्, उक्तवान्

1. Rama went to forest.
2. He spoke truth.

3. I ate the best fruit.
4. Did you go to cinema?
5. Many people had come to the programme.
6. Sita wrote a story.
7. Girls sang a song.
8. People made noise.
9. I woke up early today.
10. A house wife gave food to the beggar.

## ९. सङ्गाह्यविषयाः

१. एकादश रुद्राः - महादेवः, शिवः, रुद्रः, शङ्करः, नीललोहितः, ईशानः, विजयः, भीमः, देवदेवः, भवोद्भवः, आदित्यः ।

२. द्वादश आदित्याः - मित्रः, रविः, सूर्यः, भानुः, खगः, पूषा, हिरण्यगर्भः, मरीचिः, आदित्यः, सविता, अर्कः, भास्करः ।

३. द्वादश राशयः - मेषः, वृषभः, मिथुनः, कर्कटकः, सिंहः, कन्या, तुला, वृश्चिकः, धनुः, मकरः, कुम्भः, मीनः ।

४. द्वादश मासाः - चैत्रः, वैशाखः, ज्येष्ठः, आषाढः, श्रावणः, भाद्रपदः, आश्वयुजः, कात्तिकिः, मार्गशीर्षः, पुष्यः, माघः, फाल्गुनः ।

In Pravesha lessons, we have given an introduction to लकार. Here we are providing a list of some roots in different गण in different लकार for your intense study. Please note that these are not for the exam.

## क्रियापदानि (गणशः)

### भ्वादिगणः (प्रथमगणः)

**भू-सत्तायाम् (परस्मैपदी)**

| वर्तमाने लट् (Present tense) | | | अनद्यतनभूते लङ् (Past tense) | | |
|---|---|---|---|---|---|
| भवति | भवतः | भवन्ति | अभवत् | अभवताम् | अभवन् |
| भवसि | भवथः | भवथ | अभवः | अभवतम् | अभवत |
| भवामि | भवावः | भवामः | अभवम् | अभवाव | अभवाम |





| भविष्यति लट् (Future tense) | | | विधिलिङ् (Optative mood) | | |
|---|---|---|---|---|---|
| भविष्यति | भविष्यतः | भविष्यन्ति | भवेत् | भवेताम् | भवेयुः |
| भविष्यसि | भविष्यथः | भविष्यथ | भवेः | भवेतम् | भवेत |
| भविष्यामि | भविष्यावः | भविष्यामः | भवेयम् | भवेव | भवेम |

आज्ञायां लोट् (Imperative mood)

| | | |
|---|---|---|
| भवतु / भवतात् | भवताम् | भवन्तु |
| भव / भवतात् | भवतम् | भवत |
| भवानि | भवाव | भवाम |

**वदि (वन्द्) - अभिवादनस्तुत्योः (आत्मनेपदी)**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| वन्दते | वन्देते | वन्दन्ते | अवन्दत | अवन्देताम् | अवन्दन्त |
| वन्दसे | वन्देथे | वन्दध्वे | अवन्दथाः | अवन्देथाम् | अवन्दध्वम् |
| वन्दे | वन्दावहे | वन्दामहे | अवन्दे | अवन्दावहि | अवन्दामहि |

| लट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| वन्दिष्यते | वन्दिष्येते | वन्दिष्यन्ते | वन्देत | वन्देयाताम् | वन्देरन् |
| वन्दिष्यसे | वन्दिष्येथे | वन्दिष्यध्वे | वन्देथाः | वन्देयाथाम् | वन्देध्वम् |
| वन्दिष्ये | वन्दिष्यावहे | वन्दिष्यामहे | वन्देय | वन्देवहि | वन्देमहि |

लोट्

| | | |
|---|---|---|
| वन्दताम् | वन्देताम् | वन्दन्ताम् |
| वन्दस्व | वन्देथाम् | वन्दध्वम् |
| वन्दै | वन्दावहै | वन्दामहै |

## अदादिगणः (द्वितीयगणः)

**या-प्रापणे (परस्मैपदी)**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| याति | यातः | यान्ति | अयात् | अयाताम् | अयुः-अयान् |
| यासि | याथः | याथ | अयाः | अयातम् | अयात |
| यामि | यावः | यामः | अयाम् | अयाव | अयाम |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| यास्यति | यास्यतः | यास्यन्ति | यायात् | यायाताम् | यायुः |
| यास्यसि | यास्यथः | यास्यथ | यायाः | यायातम् | यायात |
| यास्यामि | यास्यावः | यास्यामः | यायाम् | यायाव | यायाम |

लोट्

| | | |
|---|---|---|
| यातु / यातात् | याताम् | यान्तु |
| याहि / यातात् | यातम् | यात |
| यानि | याव | याम |

**शीङ्-स्वप्ने (शयने) (आत्मनेपदी)**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| शेते | शयाते | शेरते | अशेत | अशेयाताम् | अशेरत |
| शेषे | शयाथे | शेध्वे | अशेथाः | अशेयाथाम् | अशेध्वम् |
| शये | शेवहे | शेमहे | अशेयि | अशेवहि | अशेमहि |





| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| शयिष्यते | शयिष्येते | शयिष्यन्ते | शयीत | शयीयाताम् | शयीरन् |
| शयिष्यसे | शयिष्येथे | शयिष्यध्वे | शयीथाः | शयीयाथाम् | शयीध्वम् |
| शयिष्ये | शयिष्यावहे | शयिष्यामहे | शयीय | शयीवहि | शयीमहि |

लोट्

| | | |
|---|---|---|
| शेताम् | शयाताम् | शेरताम् |
| शेष्व | शयाथाम् | शेध्वम् |
| शयै | शयावहै | शयामहै |

## जुहोत्यादिगणः (तृतीयगणः)

**(डु) दाञ् (दा) दाने (उभयपदी)**

**परस्मैपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| ददाति | दत्तः | ददति | अददात् | अदत्ताम् | अददुः |
| ददासि | दत्थः | दत्थ | अददाः | अदत्तम् | अदत्त |
| ददामि | दद्वः | दद्मः | अददाम् | अदद्व | अदद्म |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| दास्यति | दास्यतः | दास्यन्ति | दद्यात् | दद्याताम् | दद्युः |
| दास्यसि | दास्यथः | दास्यथ | दद्याः | दद्यातम् | दद्यात |
| दास्यामि | दास्यावः | दास्यामः | दद्याम् | दद्याव | दद्याम |

लोट्

| | | |
|---|---|---|
| ददातु / दत्तात् | दत्ताम् | ददतु |
| देहि / दत्तात् | दत्तम् | दत्त |
| ददानि | ददाव | ददाम |

### आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| दत्ते | ददाते | ददते | अदत्त | अददाताम् | अददत |
| दत्से | ददाथे | दद्ध्वे | अदत्थाः | अददाथाम् | अदद्ध्वम् |
| ददे | दद्वहे | दद्महे | अददि | अदद्वहि | अदद्महि |

| ऌट् | | | लिङ् | | |
|---|---|---|---|---|---|
| दास्यते | दास्येते | दास्यन्ते | ददीत | ददीयाताम् | ददीरन् |
| दास्यसे | दास्येथे | दास्यध्वे | ददीथाः | ददीयाथाम् | ददीध्वम् |
| दास्ये | दास्यावहे | दास्यामहे | ददीय | ददीवहि | ददीमहि |

लोट्

| | | |
|---|---|---|
| दत्ताम् | ददाताम् | ददताम् |
| दत्स्व | ददाथाम् | दद्ध्वम् |
| ददै | ददावहै | ददामहै |

### दिवादिगुणः (चतुर्थगणः)

**नृती (नृत्) - गात्रविक्षेपे (परस्मैपदी)**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| नृत्यति | नृत्यतः | नृत्यन्ति | अनृत्यत् | अनृत्यताम् | अनृत्यन् |
| नृत्यसि | नृत्यथः | नृत्यथ | अनृत्यः | अनृत्यतम् | अनृत्यत |
| नृत्यामि | नृत्यावः | नृत्यामः | अनृत्यम् | अनृत्याव | अनृत्याम |





| ऌट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| नर्तिष्यति | नर्तिष्यतः | नर्तिष्यन्ति | नृत्येत् | नृत्येताम् | नृत्येयुः |
| नर्तिष्यसि | नर्तिष्यथः | नर्तिष्यथ | नृत्येः | नृत्येतम् | नृत्येत |
| नर्तिष्यामि | नर्तिष्यावः | नर्तिष्यामः | नृत्येयम् | नृत्येव | नृत्येम |

लोट्

| | | |
|---|---|---|
| नृत्यतु / नृत्यतात् | नृत्यताम् | नृत्यन्तु |
| नृत्य / नृत्यतात् | नृत्यतम् | नृत्यत |
| नृत्यानि | नृत्याव | नृत्याम |

**विद्-सत्तायाम् (आत्मनेपदी)**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| विद्यते | विद्येते | विद्यन्ते | अविद्यत | अविद्येताम् | अविद्यन्त |
| विद्यसे | विद्येथे | विद्यध्वे | अविद्यथाः | अविद्येथाम् | अविद्यध्वम् |
| विद्ये | विद्यावहे | विद्यामहे | अविद्ये | अविद्यावहि | अविद्यामहि |

| ऌट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| वेत्स्यते | वेत्स्येते | वेत्स्यन्ते | विद्येत | विद्येयाताम् | विद्येरन् |
| वेत्स्यसे | वेत्स्येथे | वेत्स्यध्वे | विद्येथाः | विद्येयाथाम् | विद्येध्वम् |
| वेत्स्ये | वेत्स्यावहे | वेत्स्यामहे | विद्येय | विद्येवहि | विद्येमहि |

लोट्

| | | |
|---|---|---|
| विद्यताम् | विद्येताम् | विद्यन्ताम् |
| विद्यस्व | विद्येथाम् | विद्यध्वम् |
| विद्यै | विद्यावहै | विद्यामहै |

## स्वादिगणः (पञ्चमगणः)

### चिञ्(चि)-चयने (उभयपदी)

#### परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| चिनोति | चिनुतः | चिन्वन्ति | अचिनोत् | अचिनुताम् | अचिन्वन् |
| चिनोषि | चिनुथः | चिनुथ | अचिनोः | अचिनुतम् | अचिनुत |
| चिनोमि | चिनुवः / चिन्वः | चिनुमः / चिन्मः | अचिनवम् | अचिनुव / अचिन्व | अचिनुम / अचिन्म |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| चेष्यति | चेष्यतः | चेष्यन्ति | चिनुयात् | चिनुयाताम् | चिनुयुः |
| चेष्यसि | चेष्यथः | चेष्यथ | चिनुयाः | चिनुयातम् | चिनुयात |
| चेष्यामि | चेष्यावः | चेष्यामः | चिनुयाम् | चिनुयाव | चिनुयाम |

| लोट् | | |
|---|---|---|
| चिनोतु / चिनुतात् | चिनुताम् | चिन्वन्तु |
| चिनु / चिनुतात् | चिनुतम् | चिनुत |
| चिनवानि | चिनवाव | चिनवाम |

#### आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| चिनुते | चिन्वाते | चिन्वते | अचिनुत | अचिन्वाताम् | अचिन्वत |
| चिनुषे | चिन्वाथे | चिनुध्वे | अचिनुथाः | अचिन्वाथाम् | अचिनुध्वम् |
| चिन्व | चिनुवहे / चिन्वहे | चिनुमहे / चिन्महे | अचिन्वि | अचिनुवहि / अचिन्वहि | अचिनुमहि / अचिन्महि |





| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| चेष्यते | चेष्येते | चेष्यन्ते | चिन्वीत | चिन्वीयाताम् | चिन्वीरन् |
| चेष्यसे | चेष्येथे | चेष्यध्वे | चिन्वीथाः | चिन्वीयाथाम् | चिन्वीध्वम् |
| चेष्ये | चेष्यावहे | चेष्यामहे | चिन्वीय | चिन्वीवहि | चिन्वीमहि |

| लोट् | | |
|---|---|---|
| चिनुताम् | चिन्वाताम् | चिन्वताम् |
| चिनुष्व | चिन्वाथाम् | चिनुध्वम् |
| चिनवै | चिनवावहै | चिनवामहै |

## तुदादिगणः (षष्ठगणः)

### तुद-व्यथने (उभयपदी) परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| तुदति | तुदतः | तुदन्ति | अतुदत् | अतुदताम् | अतुदन् |
| तुदसि | तुदथः | तुदथ | अतुदः | अतुदतम् | अतुदत |
| तुदामि | तुदावः | तुदामः | अतुदम् | अतुदाव | अतुदाम |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| तोत्स्यति | तोत्स्यतः | तोत्स्यन्ति | तुदेत् | तुदेताम् | तुदेयुः |
| तोत्स्यसि | तोत्स्यथः | तोत्स्यथ | तुदेः | तुदेतम् | तुदेत |
| तोत्स्यामि | तोत्स्यावः | तोत्स्यामः | तुदेयम् | तुदेव | तुदेम |

| लोट् | | |
|---|---|---|
| तुदतु / तुदतात् | तुदताम् | तुदन्तु |
| तुद / तुदतात् | तुदतम् | तुदत |
| तुदानि | तुदाव | तुदाम |

### आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| तुदते | तुदेते | तुदन्ते | अतुदत | अतुदेताम् | अतुदन्त |
| तुदसे | तुदेथे | तुदध्वे | अतुदथाः | अतुदेथाम् | अतुदध्वम् |
| तुदे | तुदावहे | तुदामहे | अतुदे | अतुदावहि | अतुदामहि |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| तोत्स्यते | तोत्स्येते | तोत्स्यन्ते | तुदेत | तुदेयाताम् | तुदेरन् |
| तोत्स्यसे | तोत्स्येथे | तोत्स्यध्वे | तुदेथाः | तुदेयाथाम् | तुदेध्वम् |
| तोत्स्ये | तोत्स्यावहे | तोत्स्यामहे | तुदेय | तुदेवहि | तुदेमहि |

| लोट् | | |
|---|---|---|
| तुदताम् | तुदेताम् | तुदन्ताम् |
| तुदस्व | तुदेथाम् | तुदध्वम् |
| तुदै | तुदावहै | तुदामहै |

## रुधादिगणः (सप्तमगणः)

**भिदिर्-विदारणे (उभयपदी)**

### परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| भिनत्ति | भिन्तः | भिन्दन्ति | अभिनत्-द् | अभिन्ताम् | अभिन्दन् |
| भिनत्सि | भिन्त्थः | भिन्त्थ | अभिनः | अभिन्तम् | अभिन्त |
| भिनद्मि | भिन्द्वः | भिन्द्मः | अभिनदम् | अभिन्द्व | अभिन्द्म |





| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| भेत्स्यति | भेत्स्यतः | भेत्स्यन्ति | भिन्द्यात् | भिन्द्याताम् | भिन्द्युः |
| भेत्स्यसि | भेत्स्यथः | भेत्स्यथ | भिन्द्याः | भिन्द्यातम् | भिन्द्यात |
| भेत्स्यामि | भेत्स्यावः | भेत्स्यामः | भिन्द्याम् | भिन्द्याव | भिन्द्याम |

| लोट् | | |
|---|---|---|
| भिनत्तु, भिन्तात् | भिन्ताम् | भिन्दन्तु |
| भिन्द्धि, भिन्तात् | भिन्तम् | भिन्त |
| भिनदानि | भिनदाव | भिनदाम |

### आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| भिन्ते | भिन्दाते | भिन्दते | अभिन्त | अभिन्दाताम् | अभिन्दत |
| भिन्त्से | भिन्दाथे | भिन्द्ध्वे | अभिन्त्थाः | अभिन्दाथाम् | अभिन्दध्वम् |
| भिन्दे | भिन्द्वहे | भिन्द्महे | अभिन्दि | अभिन्द्वहि | अभिन्द्महि |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| भेत्स्यते | भेत्स्येते | भेत्स्यन्ते | भिन्दीत | भिन्दीयाताम् | भिन्दीरन् |
| भेत्स्यसे | भेत्स्येथे | भेत्स्यध्वे | भिन्दीथाः | भिन्दीयाथाम् | भिन्दीध्वम् |
| भेत्स्ये | भेत्स्यावहे | भेत्स्यामहे | भिन्दीय | भिन्दीवहि | भिन्दीमहि |

| लोट् | | |
|---|---|---|
| भिन्ताम् | भिन्दाताम् | भिन्दताम् |
| भिन्त्स्व | भिन्दाथाम् | भिन्द्ध्वम् |
| भिनदै | भिनदावहै | भिनदामहै |

## तनादिगणः (अष्टमगणः)

### (डु) कृञ् (कृ) - करणे (उभयपदी)

#### परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| करोति | कुरुतः | कुर्वन्ति | अकरोत् | अकुरुताम् | अकुर्वन् |
| करोषि | कुरुथः | कुरुथ | अकरोः | अकुरुतम् | अकुरुत |
| करोमि | कुर्वः | कुर्मः | अकरवम् | अकुर्व | अकुर्म |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| करिष्यति | करिष्यतः | करिष्यन्ति | कुर्यात् | कुर्याताम् | कुर्युः |
| करिष्यसि | करिष्यथः | करिष्यथ | कुर्याः | कुर्यातम् | कुर्यात |
| करिष्यामि | करिष्यावः | करिष्यामः | कुर्याम् | कुर्याव | कुर्याम |

| लोट् | | |
|---|---|---|
| करोतु / कुरुतात् | कुरुताम् | कुर्वन्तु |
| कुरु / कुरुतात् | कुरुतम् | कुरुत |
| करवाणि | करवाव | करवाम |

#### आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| कुरुते | कुर्वाते | कुर्वते | अकुरुत | अकुर्वाताम् | अकुर्वत |
| कुरुषे | कुर्वाथे | कुरुध्वे | अकुरुथाः | अकुर्वाथाम् | अकुरुध्वम् |
| कुर्वे | कुर्वहे | कुर्महे | अकुर्वि | अकुर्वहि | अकुर्महि |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| करिष्यते | करिष्येते | करिष्यन्ते | कुर्वीत | कुर्वीयाताम् | कुर्वीरन् |
| करिष्यसे | करिष्येथे | करिष्यध्वे | कुर्वीथाः | कुर्वीयाथाम् | कुर्वीध्वम् |
| करिष्ये | करिष्यावहे | करिष्यामहे | कुर्वीय | कुर्वीवहि | कुर्वीमहि |





| लोट् | | |
|---|---|---|
| कुरुताम् | कुर्वाताम् | कुर्वताम् |
| कुरुष्व | कुर्वाथाम् | कुरुध्वम् |
| करवै | करवावहै | करवामहै |

## क्र्यादिगणः (नवमगणः)

### क्रीञ् - द्रव्यविनिमये (उभयपदी)

#### परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| क्रीणाति | क्रीणीतः | क्रीणन्ति | अक्रीणीत् | अक्रीणीताम् | अक्रीणन् |
| क्रीणासि | क्रीणीथः | क्रीणीथ | अक्रीणाः | अक्रीणीतम् | अक्रीणीत |
| क्रीणामि | क्रीणीवः | क्रीणीमः | अक्रीणाम् | अक्रीणीव | अक्रीणीम |

| लृट् | | | विधिलिङ् | | |
|---|---|---|---|---|---|
| क्रेष्यति | क्रेष्यतः | क्रेष्यन्ति | क्रीणीयात् | क्रीणीयाताम् | क्रीणीयुः |
| क्रेष्यसि | क्रेष्यथः | क्रेष्यथ | क्रीणीयाः | क्रीणीयातम् | क्रीणीयात |
| क्रेष्यामि | क्रेष्यावः | क्रेष्यामः | क्रीणीयाम् | क्रीणीयाव | क्रीणीयाम |

| लोट् | | |
|---|---|---|
| क्रीणातु / क्रीणीतात् | क्रीणीताम् | क्रीणन्तु |
| क्रीणीहि / क्रीणीतात् | क्रीणीतम् | क्रीणीत |
| क्रीणानि | क्रीणाव | क्रीणाम |

#### आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| क्रीणीते | क्रीणाते | क्रीणते | अक्रीणीत | अक्रीणाताम् | अक्रीणत |
| क्रीणीषे | क्रीणाथे | क्रीणीध्वे | अक्रीणीथाः | अक्रीणाथाम् | अक्रीणीध्वम् |
| क्रीणे | क्रीणीवहे | क्रीणीमहे | अक्रीणि | अक्रीणीवहि | अक्रीणीमहि |

